# काशीपञ्चकम्

मनोनिवृत्तिः परमोपशान्तिः
सा तीर्थवर्या मणिकर्णिका च ।
ज्ञानप्रवाहा विमलादिगङ्गा
सा काशिकाहं निजबोधरूपा ॥ १॥

यस्यामिदं कल्पितमिन्द्रजालं
चराचरं भाति मनोविलासम् ।
सच्चित्सुखैका परमात्मरूपा
सा काशिकाहं निजबोधरूपा ॥ २॥

कोशेषु पञ्चस्वधिराजमाना
बुद्धिर्भवानी प्रतिदेहगेहम् ।
साक्षी शिवः सर्वगतोऽन्तरात्मा
सा काशिकाहं निजबोधरूपा ॥ ३॥

काश्यां हि काश्यते काशी काशी सर्वप्रकाशिका ।
सा काशी विदिता येन तेन प्राप्ता हि काशिका ॥ ४॥

काशीक्षेत्रं शरीरं त्रिभुवन-जननी व्यापिनी ज्ञानगङ्गा ।
भक्तिः श्रद्धा गयेयं निजगुरु-चरणध्यानयोगः प्रयागः ।
विश्वेशोऽयं तुरीयः सकलजन-मनःसाक्षिभूतोऽन्तरात्मा
देहे सर्वं मदीये यदि वसति पुनस्तीर्थमन्यत्किमस्ति ॥ ५॥

इति श्रीमद् शङ्कराचार्यविरचितं कशिपन्चकं समाप्तम् ।